# VANAMALA

**a commentary on the**

# Taittiriyopanishad Bhashya

BY

SRI ACHYUTA KRISHNANANDA TIRTHA



SRIRANGAM:
SRI VANI VILAS PRESS.
1913.

# ॥ तैत्तिरीयोपनिषद्भाष्यम् ॥

श्रीमत्स्वयंप्रकाशानन्दसरस्वतीचरणारविन्दसंलग्नरजोभूतेन

अच्युतकृष्णानन्दतीर्थेन विरचितया

**वनमालाख्यया व्याख्यया**

समेतम् ॥

महीशूरपुरी श्रीमन्महाराजसंस्कृतपाठशालाद्वैतवेदान्ताध्यापकेन

**जी. रामस्वामिशास्त्रिणा**

सम्यक्परिशोधितम् ॥



श्रीरङ्गस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रितम् ।

१९१३

# PREFACE.

ANAMALA is the name given to this fine and hitherto unpublished commentary by SRI ACHYUTA KRISHNANANDA TIRTHA, on the Taittiriya Upanishad Bhashya of Sri Sankaracharya. The Commentator is already known to the Sanskrit Literary world as the author of the commentary on Siddhantalesa Sangraha, the famous Vedantic work of Appaya Dikshita. A perusal of this Vanamala would show how clearly this commentary has brought out the meaning of the Bhashya and how very essential it is for a right understanding of several of the passages. In some places are found in the commentary excellent readings of the Bhashya which were not available up to now and for want of which much difficulty was felt in construing those passages. We are sure that all Sanskrit scholars will justly appreciate the value of this commentary and will consider the unearthing of this as a distinct gain to Sanskrit Literature. In the preparation of this precious for the Press we had the help of several manuscripts received from the following:—The Government Oriental Library of Mysore, Brahmasri Rangavathiyar of Kalladakurichi, and Brahmasri Muthuswamy Sastrigal of Nallur.

It has been the privilege of the Sri Vani Vilas Press to bring out a collected and uniform edition of all the works of Sri Sankaracharya in 20 Vols. These Volumes contain the text only of his works. Several of the subscribers desired to

have commentaries on these works so that they may help them to understand the texts properly. In response to this call, I have great pleasure in bringing out, as the first instalment, the Taittiriya Upanishad Bhashya with this excellent commentary. The next volume which is now in the Press is the Vishnu-sahasranama Bhashya with the hitherto unpublished commentary of Taraka Brahmananda. God willing, it is hoped to publish one after another rare commentaries on all the works of Sri Sankaracharya.

T. K. Balasubrahmanyam

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

तन्न संभवति; प्रत्यवायशब्दितस्यागामिदुःखस्य निषिद्धाचरणजन्यस्य भावरूपस्याभावनिमित्तकत्वाभावादिति मीमांसकदूषणम् ...

'अतः पूर्वोपचितदुरितेभ्यः' इत्यादिना, 'अकुर्वन्विहितं कर्म' इति वचनगतशतृप्रत्ययादकरणस्य प्रत्यवायहेतुत्वमवगम्यते, अकरणस्य प्रत्यवायहेतुत्वानभ्युपगमे शतृप्रत्ययानुपपत्तिरिति शङ्कायाम्, यदि यथावन्नित्यनैमित्तिकानुष्ठानं स्यात्तदा संचितदुरितक्षयोऽपि भवेत्, न चायं विहितमकार्षीत्ततः प्रत्यवायी भविष्यतीति संचितप्रत्यवायः शिष्टैर्लक्ष्यत इति शतृप्रत्ययस्य लक्षणार्थत्वस्वीकारान्न तद्बलादकरणस्य प्रत्यवायहेतुत्वसिद्धिरिति समाधानम् ..

'अन्यथा' इत्यादिना, 'लक्षणहेत्वोः क्रियायाः' इति शतृप्रत्ययस्योभयत्र विधाने सति किमिति हेतुत्वमेव न गृह्यत इत्याक्षेपे, सर्वस्य भावरूपस्य कार्यस्य भावरूपं कारणमिति प्रत्यक्षादिभिरवधारितत्वाच्छतृप्रत्ययादभावस्य हेतुत्वाभिधाने सर्वप्रमाणविरोधः स्यादिति समाधानम् ...

'अतोऽयत्नतः' इत्यादिना, यस्मादकरणनिमित्तप्रत्यवायपरिहारार्थं न नित्यं कर्म, किंतु संचितदुरितक्षयफलकम्, तस्मान्न यथोक्तचरितस्य मुक्तिरिति मीमांसकाद्यपक्षनिराकरणोपसंहारः ...

'तन्न' इत्यादिना, स्वर्गकामवाक्ये स्वर्गशब्देन निरतिशयप्रीतेर्मुक्तेरुक्तत्वात्तद्धेतुत्वेन कर्मविधानात्कर्मसाध्यैव मुक्तिरिति मीमांसकद्वितीयपक्षस्य यच्चोक्तमित्यादिनानूद्य मोक्षस्य नित्यत्वान्न कर्मसाध्यत्वं संभवति, यदारब्धं तदनित्यमिति व्याप्तिदर्शनादिति निराकरणम्

'विद्यासहितानाम्' इत्यादिना, विद्यारहितस्य कर्मणोऽनित्यफलजनकत्वेऽपि विद्यासहितकर्मणो नित्यमोक्षफलजननसामर्थ्यमस्तीति समुच्चयवादिशङ्का ...

'न; विरोधात्' इत्यादिना, विद्यासहितेनापि कर्मणा मोक्षश्चेदारभ्यते, तर्हि यत्कृतकं तदनित्यमिति न्यायान्मोक्षानित्यत्वं दुर्वारमिति शङ्कानिराकरणम् ...

'यद्विनष्टम्' इत्यादिना, यद्घटादि विनष्टं तत्पुनर्नोत्पद्यत इति दर्शनाद्घटादिनाशरूपध्वंसस्यारब्धस्यापि नित्यत्वं निश्चीयते; एवं सति यदारब्धं तदनित्यमिति भवदुक्तव्याप्तेर्भङ्गः; तथा च ध्वंसवन्नित्यो-

ऽपि मोक्ष आरभ्य एवेति पूर्वपक्षः ...

'न ; मोक्षस्य भावरूपत्वात्' इत्यनेन, यद्भावरूपं कार्यं तदनित्यमिति व्याप्तेर्विवक्षितत्वान्नास्मदुक्तव्याप्तेर्भङ्गः, तथा च निरतिशयप्रीतिरूपाया मुक्तेर्भवन्मतरीत्यापि भावरूपत्वात्तस्या आरभ्यत्वे स्यादेवानित्यत्वमिति पूर्वपक्षखण्डनम् ...

'प्रध्वंसाभावोऽपि' इत्यादिना, ध्वंसात्मकाभावस्य कार्यत्वमभ्युपगम्य यद्भावरूपं कार्यं तदनित्यमिति व्याप्तिर्विवक्षिता ; वस्तुतस्तु ध्वंसस्य कार्यत्वमेव नास्ति, नैरुक्तैर्जनेर्भावपदार्थधर्मत्वप्रतिपादनात्तद्विरोधेन ध्वंसात्मकाभावस्य भावरूपजन्माश्रयत्वायोगात् ; तथा चाभावस्य निर्विशेषत्वात्कार्यत्वं कल्पनामात्रमिति कथनम् ...

'भावप्रतियोगी' इत्यादिना, अभावस्य भावविरोधित्वादपि न तस्य भावरूपो धर्मः संभवतीति कथनम् ...

'यथा हि' इत्यादिना, अभावस्य कथं निर्विशेषत्वम्, अभावे घटादिप्रतियोगिकत्वस्य, संख्यारूपगुणस्योत्पत्त्यादिक्रियावत्त्वस्य च परैः स्वीकारादित्याक्षेपे, भावप्रत्ययस्यैकाकारत्वाद्यथा एक एव भावः घटभावः पटभाव इति रीत्या भिन्न इव घटादिभिर्विशेष्यते घटादिप्रतियोगिकत्वेन विकल्प्यते, तथा घटो नास्ति पटो नास्तीति प्रतीयमानाभावोऽप्येक एव घटादिप्रतियोगिकत्वेन विकल्प्यते ; एवमेक एवाभावः क्रियायोगाद्गुणयोगाद्द्रव्यादिवद्विकल्प्यते न तु तत्त्वतः स विशेष इति समाधानम् ...

'न हि' इत्यादिना, उत्पलादिवदभावो न घटादिरूपविशेषणाश्रयः विशेषणवत्त्वे भावरूपधर्माश्रयस्य भावत्वनियमेन अभावो भाव एव स्यात् इत्यभावस्य तत्त्वतः सविशेषत्वे बाधकप्रदर्शनम् ...

'विद्याकर्मकर्तुः' इत्यादिना, साध्यस्य मोक्षस्य स्वरूपेण नित्यत्वाभावेऽपि विद्याकर्मकर्तुर्नित्यत्वेन तत्कृतविद्याकर्मरूपसाधनसांतत्यात्तज्जनितस्य मोक्षस्यापि प्रवाहनित्यत्वं स्यादिति शङ्का ...

'न, कर्तृत्वस्य दुःखरूपत्वात्' इत्यादिना, कर्तृत्वस्य दुःखरूपत्वान्मुक्तिकालेऽपि तस्यानुपरमे अनिर्मोक्षप्रसङ्गः, कर्तृत्वस्योपरमे च साधनसांतत्याभावान्मोक्षस्य विच्छित्तिरिति शङ्कासमाधानम् ...

## द्वितीयोऽनुवाकः .... १५-१६

## तृतीयोऽनुवाकः .... १३३—१४१

## चतुर्थोऽनुवाकः .... १४२—१४६

## षष्ठोऽनुवाकः ... १५७—१८१

## नवमोऽनुवाकः ... २२३—२२९

क्रमेण भाष्यवाक्यानां वनमालानुसारतः ।
प्रायेण लिखितो भावः क्वचिदन्यानुसारतः ॥

प्रमादो यदि विद्येत बोधनीयो दयालुभिः ।
इति प्रार्थयतेऽत्यन्तं जी रामस्वामिनामकः ॥



॥ श्रीः ॥

# ॥ उदाहरणस्थानसूचिका ॥



| उदाहृतवाक्यानि. | | यखण्डादीनामङ्का |
|---|---|---|
| न्विहितं कर्म | मनुस्मृतिः | ११. ४४. |
| अथ यत्रान्यत्पश्यति | छान्दोग्योपनिषत् | ७. २४. १. |
| अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने | बृहदारण्यकोपनिषत् | ३. ८. ८. |
| अनेन जीवेनात्मनानुप्रविश्य | छान्दोग्योपनिषत् | ६. ३. २. |
| अन्योऽसावन्योऽहमस्मीति | बृहदारण्यकोपनिषत् | १. ४. १०. |
| अपाणिपादो जवनो | श्वेताश्वतरोपनिषत् | ३. १९. |
| अविद्यया मृत्युं तीर्त्वा | ईशोपनिषत् | २. |
| असन्नेव स भवति | बृहदारण्यकोपनिषत् | २. ३. ६. |
| आत्मैवेदꣳ सर्वं | छान्दोग्योपनिषत् | ७. २५. ९. |
| उदरमन्तरं कुरुते | छान्दोग्योपनिषत् | ६. २. १. |
| ऋचेऽक्षरे परमे व्योमन् | तैत्तिरीयब्राह्मणम् | ३. १०. ९. |
| एकमेवाद्वितीयं | छान्दोग्योपनिषत् | ६. २. १. |
| एतस्मिन्खल्वक्षरे | बृहदारण्यकोपनिषत् | ३. ८. ११. |
| एतस्यैवानन्दस्यान्यानि | ,, | ४. ३. ३२. |
| एतेनैवायतनेनैकतरमन्वेति | प्रश्नोपनिषत् | ५. २. |
| कथमसतः सज्जायेत | छान्दोग्योपनिषत् | ६. २. २. |
| क्षेत्रज्ञं चापि मां विद्धि | भगवद्गीता | १३. २. |
| ज्ञानमुत्पद्यते पुंसः | भारते मोक्षधर्मः | २०४. ८. |
| तं यथा यथोपासते | मुद्गलोपनिषत् | ३. |
| ततः शेषेण | आपस्तम्बधर्मसूत्रम् | २. २. ३. |
| तत्केन कं पश्येत् | बृहदारण्यकोपनिषत् | ४. ५. १५. |
| तत्त्वमसि | छान्दोग्योपनिषत् | ६. ८. ७. |
| तत्सत्यम् | ,, | ६. ८. ७. |

| | | |
|---|---|---|
| तत्सृष्ट्वा तदेवानुप्राविशत् | बृहदारण्यकोपनिषत् | १. ४. १०. |
| तद्य इह रमणीयचरणाः | छान्दोग्योपनिषत् | ५. १० ७. |
| तद्यथा शङ्कुना | ,, | २. २३. ३. |
| तपसा कल्मषं हन्ति | मनुस्मृतिः | १२. १०४. |
| तयोर्ध्वमायन्नमृतत्वमेति | कठोपनिषत् | ६. १६. |
| त्रिः प्रथमामन्वाह त्रिरुत्तमाम् | तैत्तिरीयसंहिता | २. ५. ७. |
| न हि विज्ञातुर्विज्ञातेः | बृहादारण्यकोपनिषत् | ४. ३. ३०. |
| नामरूपयोर्निर्वहिता | छान्दोग्योपनिषत् | ८. १४. १. |
| पङ्क्ताक्षरा पाङ्क्तिः पाङ्क्तो यज्ञः | तैत्तिरीयसंहिता | ६. १. १. |
| पुरुषे त्वेवाविस्तरामात्मा | ऐतरेयोपनिषत् | २. ३, २. ५ |
| प्रव्रजिष्यन्वा अरे | बृहदारण्यकोपनिषत् | ४. ५. २. |
| प्राणस्य प्राणमुत | बृहदारण्यकोपनिषत् | ४. ४. ८. |
| बुद्ध्वा कर्माणि कुर्वीत | आपस्तम्बधर्मसूत्रम् | २. २१. ५. |
| ब्रह्मैवेदं सर्वं | नृसिंहतापनीयोपनिषत् | २. |
| मध्यं ह्येषामङ्गानामात्मा | छान्दोग्योपनिषत् | |
| मनसश्चेन्द्रियाणां च | भारते मोक्षधर्मः | २५०. ४. |
| महद्यक्षं प्रथमजं वेद | बृहदारण्यकोपनिषत् | ५. ४. १. |
| मृत्योः स मृत्युमाप्नोति | कठोपनिषत् | २. १०. |
| यत्र नान्यत्पश्यति | छान्दोग्योपनिषत् | ७. २४. १. |
| यत्र नान्यद्विजानाति स भूमा | ,, | ,, |
| यत्र हि द्वैतमिव भवति | बृहदारण्यकोपनिषत् | ४. ५. १५. |
| यस्य ज्ञानमयं तपः | मुण्डकोपनिषत् | १. १. ९. |
| यावद्ध्यस्मिञ्छरीरे | कौषीतक्युपनिषत् | ३. २. |
| यो वै स बहिर्धा | छान्दोग्योपनिषत् | ३. १२. ७. |
| वाचारम्भणं विकारो | ,, | ६. १. ४. |
| विद्वान्यजते | तैत्तिरीयसंहिता | १. ७. १. |
| विद्वान्याजयति | ,, | ३. २. १. |
| वेदः कृत्स्नोऽधिगन्तव्यः | मनुस्मृतिः | २. १६५. |
| श्रोतव्यः | बृहदाराण्यकोपनिषत् | २. ४. ५. |
| श्रोतव्यो मन्तव्यो | ,, | ,, |
| स एकधा | छान्दोग्योपनिषत् | ७. १६. २. |



# ॥ तैत्तिरीयोपनिषत् ॥

यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते ।
येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः ॥ १ ॥

---

॥ श्रीः ॥

विघ्नेश्वरं विघ्नशान्त्यै वाणीं वाचः प्रवृत्तये ।
गुरून्गूढार्थभानाय प्रणमामि निरन्तरम् ॥ १ ॥

जगन्मङ्गलरूपाय सृष्टिस्थित्यन्तकारिणे ।
नमो लक्ष्मीसमेताय कृष्णाय परमात्मने ॥ २ ॥

परिपूर्णं नित्यशुद्धं निर्विशेषं स्वयंप्रभम् ।
सत्यानन्दस्वरूपं यत्तदहं ब्रह्म निर्भयम् ॥ ३ ॥

आचार्यस्य प्रसादेन पूर्वपुण्यैकजन्मना ।
तैत्तिरीयकभाष्यस्य व्याख्यां कुर्वेऽतिभक्तितः ॥ ४ ॥

तैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारः तत्प्रतिपाद्यं ब्रह्म जगज्जन्मादिकारणत्वेन तटस्थलक्षणेन सामान्येनोपलक्षितं सत्यज्ञानादिना स्वरूपलक्षणेन विशेषतो निश्चितं नमस्करोति— यस्माज्जातमिति । ज्ञानात्मन इति स्वरूपलक्षणं सूचितम् ॥ १ ॥

यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।
व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥ २ ॥

तैत्तिरीयकसारस्य मयाचार्यप्रसादतः ।
विस्पष्टार्थरुचीनां हि व्याख्येयं संप्रणीयते ॥ ३ ॥

नित्यान्यधिगतानि कर्माणि उपात्तदुरितक्षयार्थानि, काम्यानि च

---

गुरुभक्तेर्विद्याप्राप्तावन्तरङ्गसाधनत्वं ख्यापयितुं गुरून्प्रणमति— यैरिति । इमे क्रमेण व्याख्येयत्वेन बुद्धिस्थाः । पदानि च वाक्यानि च प्रमाणानि च पदवाक्यप्रमाणानि । 'सोऽकामयत' इत्यादौ ब्रह्मसत्त्वसाधकतया विवक्षितान्यनुमानानि प्रमाणानि । तेषां पदवाक्यप्रमाणानां विवेचनपूर्वकं व्याख्याता इत्यर्थः । यद्वा पदं व्याकरणं तत्साधुत्वविचाररूपत्वात्, वाक्यं मीमांसा वेदवाक्यविचाररूपत्वात्, प्रमाणं न्यायशास्त्रं प्राधान्येन प्रत्यक्षादिप्रमाणविचारात्मकत्वात्; ततश्च पदवाक्यप्रमाणैः साधनभूतैर्व्याख्याता इत्यर्थः ॥ २ ॥

चिकीर्षितं निर्दिशति—तैत्तिरीयकेति । ननु व्युत्पन्नस्य पदेभ्य एव पदार्थस्मृतिसंभवात्पदस्मारितपदार्थानां यथायोग्यं संबन्धस्यैव वाक्यार्थस्यावगन्तुं शक्यत्वात्सूत्रकारेण वेदान्ततात्पर्यस्य निरूपितत्वाच्च व्यर्थः पृथग्व्याख्यारम्भ इत्याशङ्क्याह— विस्पष्टार्थेति । मन्दमतीनां स्वत एव निःशेषपदार्थस्मरणासंभवादुपनिषद्गतनिःशेषपदार्थानां निःसंशयज्ञानं येभ्यो रोचते तेषामुपकारायेत्यर्थः ॥ ३ ॥

उपनिषदः कर्मकाण्डेन नियतपौर्वापर्यसूचितं संबन्धं विशिष्य ख्यापयितुं कर्मकाण्डार्थं कीर्तयति— नित्यानीति । पूर्वस्मिन्ग्रन्थे नित्यानि कर्माणि संचितदुरितक्षयार्थत्वेनाधिगतानि; तैश्च नित्यैरिह जन्मनि जन्मान्तरेषु वानुष्ठितैः क्षीणपापस्य शुद्धान्तःकरणस्य कर्मानुष्ठानप्रयोजकाविद्याकामपरिहारद्वारा मुक्तिसिद्धये इदानीमुपनिषदि ब्रह्मविद्या प्रस्तूयते निरूप्यत इत्यर्थः । तथा च कर्मणां ब्रह्मविद्यां प्रति चित्तशुद्धिद्वारा साधनत्वात्तत्प्रति-

फलार्थिनां पूर्वस्मिन्ग्रन्थे ; इदानीं कर्मोपादानहेतुपरिहाराय ब्रह्मविद्या प्रस्तूयते । कर्महेतुः कामः स्यात्, प्रवर्तकत्वात् । आप्तकामानां हि कामाभावे स्वात्मन्यवस्थानात्प्रवृत्त्यनुपपत्तिः । आत्मकामत्वे चाप्तकामता । आत्मा च ब्रह्म । तद्विदो हि परप्राप्तिं वक्ष्यति । अतः अविद्या-

---

पादकयोरपि कर्मकाण्डोपनिषदोः साध्यसाधनभावः संबन्ध इत्यर्थः । ननु कर्मकाण्डस्य चेत्पापक्षयद्वारा विद्यायां विनियोगः, तर्हि पशुस्वर्गादिसाधनभूतानां काम्यकर्मणां तत्रोक्तिरसंगता तेषां विद्यासाधनत्वायोगादित्याशङ्कयाह— **काम्यानि चेति** । अयं भावः— काम्यानां फलार्थत्वेऽपि फलाभिसंधिं विना कृतानां तेषां विद्यासाधनत्वमप्यस्त्येव, विविदिषावाक्येन नित्यकाम्यसाधारण्येन कर्मणां विद्यायां विनियुक्तत्वात् 'अनाश्रितः कर्मफलम्' इत्यादिस्मृतिष्वपि तथोक्तत्वाच्च ; कर्मकाण्डे फलार्थिनां काम्यकर्मविधानमपि विद्योपयोग्येवेति । कर्मोपादानहेतुपरिहारायेत्यत्र निर्दिष्टः कर्मप्रवृत्तिहेतुः क इति जिज्ञासायामाह— **कर्महेतुरिति** । अत्र यद्यप्यविद्यापि कर्मोपादानहेतुः, तथा च वक्ष्यति— 'तस्मादविद्यादिकर्मोपादानहेतुनिवृत्तौ' इति, तथाप्यविद्यायाः कामद्वारा कर्महेतुत्वात्कामो हेतुरित्युक्तम् । कामस्यैव प्राधान्येन कर्महेतुत्वं भगवता व्यासेनाप्युक्तम्— 'यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्' इति । कामस्य कर्महेतुत्वेऽन्वयव्यतिरेकौ प्रमाणयति— **प्रवर्तकत्वादिति** । कामे सति प्राणिनां प्रवृत्तिदर्शनादित्यर्थः । **आप्तकामानां हीति** । अनुपपत्तिपदमभावपरम् । ततश्च आप्तकामानां प्राप्तस्वरूपानन्दानां स्वात्मनि स्वरूपानन्देऽवस्थानाद्धेतोः कामाभावे प्रवृत्त्यभावदर्शनादित्यर्थः । तेषां प्रवृत्त्यभावः प्रसिद्ध इति हि-शब्दार्थः । नन्वाप्तकामत्वे को हेतुः ? तत्राह— **आत्मकामत्वे चेति** । आत्मैव काम आनन्दो यस्य साक्षात्कृतः स आत्मकामः, तस्य भाव आत्मकामत्वम्, तस्मिन्सत्याप्तकामता भवतीत्यर्थः । ननु ब्रह्मविद्यैवाप्तकामताहेतुः नात्मानन्दसाक्षात्कारवत्त्वम् ; तत्राह—**आत्मा च ब्रह्मेति** । 'अयमात्मा ब्रह्म' इति श्रुतेरिति भावः । ब्रह्मविद् आत्मानन्दप्राप्तौ मानमाह—**तद्विदो हीति** । हि यस्मात्परस्य स्वरूपानन्द-

निवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिः, 'अभयं प्रतिष्ठां विन्दते' 'एतमानन्दमयमात्मानमुपसंक्रामति' इत्यादिश्रुतेः ॥

काम्यप्रतिषिद्धयोरनारम्भात् आरब्धफलयोश्चोपभोगेन क्षयात् नित्यानुष्ठानेन च प्रत्यवायाभावात् अयत्नत एव स्वात्मन्यवस्थानं मोक्षः;

---

स्य प्राप्तिं ब्रह्मविदः 'ब्रह्मविदाप्नोति परम्' इति श्रुतिर्वक्ष्यति, तस्माद्ब्रह्मविदाप्तकाम इत्यर्थः। नन्वात्मानन्दस्य नित्यप्राप्तत्वाद्विद्यया तत्प्राप्तिश्रुतिरनुपपन्ना; नेत्याह— अत इति। आत्मस्वरूपत्वेऽप्यविद्यावृतत्वाद्विद्यया तदावरणनिवृत्तौ स्वात्मानन्दे यदभेदेनावस्थानं तदत्र परप्राप्तिर्विवक्षिता; अतो न विद्यावैयर्थ्यशङ्केति भावः। ब्रह्मविदः परप्राप्तावेवान्यदपि वाक्यद्वयं पठति—अभयमिति। ब्रह्मण्यभयं यथा भवति तथा प्रतिष्ठां स्वात्मभावेनावस्थानं यदा विन्दते तदैवाभयं गतो भवतीत्यर्थः। आनन्दमयं परमात्मानमुपसंक्रामति प्राप्नोतीत्यर्थः। इदं च वृत्तिकारमताभिप्रायेणोदाहृतम्, स्वमते आनन्दमयस्य जीवत्वादिति बोध्यम् ॥

ननु जीवस्य शरीरेऽवस्थानं बन्धहेतुः, 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुतेः; आत्यन्तिकेन शरीरसंबन्धाभावेन युक्ते स्वस्वरूपेऽवस्थानं मोक्षः, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतेः; स चात्यन्तिकः शरीरसंबन्धाभावो ब्रह्मात्मैकत्वविद्यां विना कर्मभिरेव सिध्यति, किं विद्ययेति मीमांसकः शङ्कते—काम्येति। काम्यं कर्म देवादिशरीरहेतुः, प्रतिषिद्धं कर्म तिर्यगादिशरीरहेतुः, नित्यनैमित्तिकाननुष्ठानं प्रत्यवायोत्पादनद्वारा नारक्यादिजन्महेतुः। तथा च मुमुक्षुणा सर्वात्मना काम्यप्रतिषिद्धयोरनारम्भात्सम्यङ्नित्यनैमित्तिकानुष्ठानेन प्रत्यवायानुत्पादाच्च न भाविजन्मप्राप्तिः, आरब्धफलयोश्च पुण्यपापयोरुपभोगेनैव नाशाच्च ततोऽपि भाविजन्मप्राप्तिशङ्का; तथा च विद्यासंपादनयत्नं विना मुमुक्षोरेवं वर्तमानस्यात्यन्तिकशरीरसंबन्धाभावशब्दितः स्वात्मन्येवावस्थानलक्षणो मोक्षः सिध्यतीत्यर्थः।

अथवा, निरतिशयायाः प्रीतेः स्वर्गशब्दवाच्यायाः कर्महेतुत्वात्कर्मभ्य एव मोक्ष इति चेत्, न; कर्मानेकत्वात् । अनेकानि हि आरब्धफलानि अनारब्धफलानि च अनेकजन्मान्तरकृतानि विरुद्धफलानि कर्माणि संभवन्ति । अतः तेष्वनारब्धफलानामेकस्मिन्नेव जन्मन्युपभोगेन क्षयासंभवात् शेषकर्मनिमित्तशरीरारम्भोपपत्तिः । कर्मशेषसद्भावसिद्धिश्च 'तद्य इह रमणीयचरणाः—' 'ततः शेषेण—'

अत्र च शरीरसंबन्धस्य कर्मनिमित्तकत्वात् 'निमित्तापाये नैमित्तिकापायः' इति न्यायेन शरीरसंबन्धाभावरूपमोक्षस्य कर्मसाध्यत्वोक्तिरिति मन्तव्यम्। मीमांसक एव प्रकारान्तरमाह— अथवेति । यानि कर्माणि स्वर्गसाधनत्वेन श्रुतानि तान्येव मोक्षसाधनम्, स्वर्गशब्दवाच्यस्य निरतिशयसुखस्य स्वरूपानन्दलक्षणान्मोक्षादन्यत्वासंभवात् 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्' इत्यर्थवादेन निरतिशयप्रीतेः स्वर्गशब्दवाच्यत्वावगमात् त्रिविष्टपादिजनितसुखे दुःखासंभिन्नत्वादिविशेषणानामसंभवात् । तथा च निरतिशयप्रीतिरूपस्य मोक्षस्य कर्महेतुकत्वावगमात्कर्मभ्य एव मोक्षः सिध्यति, किं विद्यासंपादनयत्नेनेत्यर्थः । तत्राद्यं मतं निराकरोति— न; कर्मानेकत्वादिति । कर्मणामनेकत्वसंभवान्न विद्यां विना मोक्षसिद्धिरित्यर्थः । संग्रहं विवृणोति— अनेकानि हीति । कर्मानेकत्वप्रसिद्धिद्योतनार्थो हि-शब्दः । तेषु कर्मसु यान्यनारब्धफलानि तेषामुपभोगेन क्षयासंभवात्तानि शेषकर्माणि तन्निमित्तशरीरारम्भ एवंवृत्तस्याप्युपपद्यत इत्यर्थः । नन्वनेकजन्मान्तरकृतानां सर्वेषामेव कर्मणां संभूय वर्तमानजन्मारम्भकत्वसंभवादनारब्धफलानि कर्माणि न सन्त्येव; नेत्याह— विरुद्धफलानीति। स्वर्गनरकादिरूपविरुद्धफलवतां ज्योतिष्टोमब्रह्महत्यादीनां संभूयैकजन्मारम्भकत्वासंभवेनैकास्मिञ्जन्मन्युपभोगेन तेषां क्षयासंभवात्सन्त्येव शेषकर्माणीत्यर्थः । संचितकर्मसद्भावे मानमाह— कर्मशेषसद्भावसिद्धिश्चेति । तत्तत्र स्वर्गादवरोहतां मध्ये ये इहास्मिँल्लोके रमणीयचरणाः पुण्यकर्माणः ते रमणीयां ब्राह्मणादियोनिं प्रतिपद्यन्त इति श्रुत्यर्थः । प्रेत्य स्वकर्मफलमनुभूय ततः

इत्यादिश्रुतिस्मृतिशतेभ्यः । इष्टानिष्टफलानामनारब्धानां क्षयार्थानि नित्यानि इति चेत्, न; अकरणे प्रत्यवायश्रवणात् । नित्याकरणनिमित्तस्य प्रत्यवायस्यासुखरूपस्य आगामिनः परिहारार्थानि नित्यानीत्यभ्युपगमात् न अनारब्धफलकर्मक्षयार्थानि । यदि नाम अनारब्धफलकर्मक्षयार्थानि नित्यानि, तथाप्यशुद्धमेव क्षपयेयुः, न शुद्धम्, विरोधाभावात् । न हि इष्टफलस्य कर्मणः शुद्धरूपत्वान्नित्यैर्विरोध उपपद्यते । शुद्धाशुद्धयोर्हि विरोधो युक्तः । न च कर्महेतूनां कामानां ज्ञानाभावे निवृत्त्यसंभवादशेषकर्मक्षयोपपत्तिः । अनात्मविदो हि कामः, न आत्म-

---

शेषेण जन्म प्रतिपद्यन्त इति स्मृतिरपि स्वर्गादवरोहतां शेषकर्मसद्भावं दर्शयतीत्यर्थः । ननु संचितकर्मणां सत्त्वेऽपि तेषां नित्यानुष्ठानेन क्षयान्न तैर्भाविजन्मप्राप्तिरिति शङ्कते— इष्टानिष्टेति । नित्यानां संचितकर्मक्षयफलकत्वं मीमांसकस्य स्वाभ्युपगमविरुद्धमिति दूषयति— नेति । असुखरूपस्येति । दुःखसाधनस्येति यावत् । आगामिन इति । नित्याकरणानन्तरमेव प्रसक्तस्येत्यर्थः । नित्यानां तदभ्युपगमेऽपि परस्य नाभिमतसिद्धिरित्याह— यदि नामेति । नित्यान्यनारब्धफलकर्मक्षयार्थानि सन्तु नामेत्यर्थः । 'धर्मेण पापमपनुदति' इति शास्त्राच्छुद्धयशुद्धिरूपयोः सुकृतदुष्कृतयोरेव विरोधाच्च नित्यानि पापमेव नाशयेयुः, न संचितपुण्यमपि; अतस्तत्पुण्यनिमित्तं भाविजन्म मुमुक्षोरवश्यंभावीत्यर्थः । विरोधाभावमेव साधयति— न हीत्यादिना । यदुक्तं काम्यप्रतिषिद्धयोरनारम्भादिति, तत्र जन्मारभ्य प्रायणपर्यन्तं सर्वात्मना प्रतिषिद्धवर्जनं पुरुषेण कर्तुमशक्यम् अतिनिपुणानामपि सूक्ष्मापराधदर्शनात्, काम्यवर्जनमपि सर्वात्मना कर्तुमशक्यमित्याह— न चेति । आत्मज्ञानं हि कामानामशेषतो निवर्तकम्, 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति स्मरणात्; ज्ञानाभावे च सति कामावश्यंभावात् काम्यानुष्ठानमपि कदाचिन्मुमुक्षोः प्रसज्जते, तद्वशाच्च जन्मापि स्यादित्यर्थः । अशेषकर्मक्षयोपपत्तिर्न चेत्यन्वयः । ननु आत्मज्ञानं न कामानां निवर्तकम् आत्मविदोऽपि कामदर्शनादिति; नेत्याह— अनात्मविदो हीति । फलविष-

विदः, फलविषयत्वात् । स्वात्मनि च कामानुपपत्तिः, नित्यप्राप्तत्वात् । स्वस्यायमात्मा परं ब्रह्मेत्युक्तम् । नित्यानां च अकरणमभावः, ततः प्रत्यवायानुपपत्तिरित्यतः पूर्वोपचितदुरितेभ्यः प्राप्यमाणायाः प्रत्यवायक्रियाया नित्याकरणं लक्षणमिति शतृप्रत्ययस्य नानुपपत्तिः— 'अकुर्वन्विहितं कर्म' इति । अन्यथा हि अभावाद्भावोत्पत्तिरिति सर्वप्रमाण-

यत्वादिति । आत्मव्यतिरिक्तं किंचिदपि वस्तुतो नास्तीति मन्यमानस्यात्मविदः स्वव्यतिरिक्तफलाभावादिति भावः । तर्हि स्वात्मन्येवानन्दरूपे तस्य कामोऽस्तु; नेत्याह— **स्वात्मनि चेति** । नन्वात्मविदः प्राप्तस्वरूपानन्दस्यापि परब्रह्मप्राप्तौ कामोऽस्ति; नेत्याह— **स्वस्येति** । विदुष इत्यर्थः । नित्यानुष्ठानेन च प्रत्यवायाभावादिति वदता त्वया यदि प्रत्यवायस्य नित्याकरणजन्यत्वं विवक्षितम्, तदा तदपि न संभवतीत्याह—**नित्यानां चेति । प्रत्यवायानुपपत्तिरिति** । प्रत्यवायोत्पत्तिर्न संभवतीत्यर्थः । ननु 'अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति' इति वचनगतशतृप्रत्ययादकरणस्य प्रत्यवायहेतुत्वमवगम्यते; अकरणात्प्रत्यवायोत्पत्त्यनुपगमे च शतृप्रत्ययानुपपत्तिरिति; नेत्याह— **इत्यत इति** । वक्ष्यमाणरीत्या अकरणस्य प्रत्यवायाहेतुत्वादित्यर्थः । 'लक्षणहेत्वोः क्रियायाः' इति सूत्रेण हेताविव लक्षणेऽपि शतुर्विधानादत्र लक्षणार्थ एव स इत्यर्थः । नन्वकरणेन प्रत्यवायक्रिया कथं लक्ष्यते? उच्यते— यदि यथावन्नित्यानुष्ठानमभविष्यत्तदा संचितदुरितक्षयोऽभविष्यत्, न चायं नित्यमकार्षीत्; ततः प्रत्यवायी भविष्यतीत्येवं नित्याकरणेन पूर्वजन्मसु संचितेभ्यो दुरितेभ्यः प्राप्यमाणा दुःखरूपा प्रत्यवायक्रिया शिष्टैर्लक्ष्यत इति । ननु लक्षणे हेतौ च साधारणाच्छतृप्रत्ययादकरणस्य प्रतीतं हेतुत्वमेव कस्मान्नोपेयते? तत्राह— **अन्यथेति** । अकरणस्य हेतुत्वे स्वीकृते सत्यभावाद्भाव उत्पद्यत इति प्रसज्येत अकरणस्याभावरूपताया उक्तत्वादित्यर्थः । तत्रेष्टापत्तिं वारयति— **सर्वेति** । अभावस्य भावधर्माश्रयत्वायोग्यत्वं प्रत्यक्षादिप्रमाणसिद्धम्, अभावस्य कारणत्वरूपभावधर्माश्रयत्वस्वीकारे तु प्रत्यक्षादिप्रमाणविरोधः स्यादित्यर्थः । न चैवमकरणस्य कथं

व्याकोप इत्यतः अयत्नतः स्वात्मन्यवस्थानमित्यनुपपन्नम् । यच्चोक्तं निरतिशयप्रीतेः स्वर्गशब्दवाच्यायाः कर्मनिमित्तत्वात्कर्मभ्य एव मोक्ष इति, तन्न; नित्यत्वान्मोक्षस्य । न हि नित्यं किंचिदारभ्यते लोके, यदारब्धं तदनित्यमिति । अतो न कर्मारभ्यो मोक्षः । विद्यासहितानां कर्मणां नित्यारम्भसामर्थ्यमिति चेत्, न; विरोधात् । नित्यं चारभ्यत इति विरुद्धम् । यद्विनष्टं तदेव नोत्पद्यत इति प्रध्वंसाभाववन्नित्योऽपि

---

ज्ञापकत्वं कथं वानुपलब्धेरभावज्ञापकत्वमिति वाच्यम्, अकरणानुपलब्ध्योर्ज्ञातयोरेव ज्ञापकत्वाभ्युपगमेन स्वरूपतस्तयोर्ज्ञानहेतुत्वाभावादित्यन्यत्र विस्तरः । मीमांसकस्वाद्यप्रकारनिराकरणमुपसंहरति— **इत्यत इति** । उक्तप्रकारेण ब्रह्मज्ञानं विना यथावर्णितचरितस्यापि मुमुक्षोर्मोक्षासंभवादित्यर्थः । अथ वेत्याद्युक्तमप्यनूद्य निराकरोति— **यच्चोक्तमित्यादिना** । किं केवलकर्मणां मोक्षारम्भकत्वम्, विद्यासहितानां वा? नाद्य इत्याह—**तन्नेति** । ननु नित्यत्वेऽपि कर्मसाध्यत्वं तस्य किं न स्यादिति; नेत्याह— **न हीति** । लोके यन्नित्यमात्मादि तत्किंचिदपि नारभ्यते, यद्धि घटाद्यारब्धं तदनित्यमिति व्याप्तिदर्शनादित्यर्थः । द्वितीयकल्पमनूद्य निराकरोति—**विद्यासहितानामिति** । विद्यारूपसहकारिमहिम्ना कर्मारभ्यस्यापि मोक्षस्य नित्यत्वं भविष्यतीति शङ्काभिमानः । **विरुद्धमिति** । विद्यारूपसहकारिमहिम्ना तावत्कर्मसाध्ये मोक्षे कश्चिदतिशयो भविष्यति, 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' इति श्रुतेः । स चातिशयो न नित्यत्वरूपः, 'यत्कृतकं तदनित्यम्' इति व्याप्तिविरोधात् 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिश्रुतिविरोधाच्च; किं तु तदतिरिक्त उत्कर्षरूप एव वक्तव्य इति भावः । किं च निरतिशयप्रीतेरात्मस्वरूपत्वेनारभ्यत्वायोगाच्च न विद्यासहितानां केवलानां वा कर्मणां मोक्षः फलम् । न च स्वर्गकामश्रुतिविरोधः, तत्र निरतिशयप्रीतिवाचकस्य स्वर्गशब्दस्य कर्मयोग्यतानुसारेण विषयजनितसुखविशेषे लाक्षणिकत्वोपपत्तेः । एतच्च बृहदारण्यकषष्ठाध्यायवार्त्तिके प्रपञ्चितम्, तत्रैव द्रष्टव्यम् । शङ्कते— **यद्विनष्टमिति** । यद्घटादि विनष्टं तत्पुनर्नोत्पद्यत इति दर्श-

मोक्ष आरभ्यत एवेति चेत्, न; मोक्षस्य भावरूपत्वात्। प्रध्वंसाभावोऽप्यारभ्यत इति न संभवति; अभावस्य विशेषाभावाद्विकल्पमात्रमेतत्। भावप्रतियोगी ह्यभावः। यथा ह्यभिन्नोऽपि भावो घटपटादिभिर्विशेष्यते भिन्न इव घटभावः पटभाव इति, एवं निर्विशेषोऽप्यभावः क्रियागुणयो-

---

नात् घटादिविनाशरूपस्य प्रध्वंसाभावस्य नित्यत्वं निश्चीयते, तस्यानित्यत्वे तु विनष्टस्य घटादेः पुनरुत्पत्तिप्रसङ्गः स्यात्; ध्वंसप्रागभावानधिकरणकालस्य प्रतियोगिकालत्वनियमादित्यर्थः। ततः किम्? तत्राह—**प्रध्वंसाभाववदिति।** प्रध्वंसाभावस्य कार्यत्वमुपेत्य यद्भावकार्यं तदनित्यमिति व्याप्तिर्विवक्षिता; निरतिशयप्रीतिरूपा च मुक्तिर्भावरूपैव तवापि संमता, अतो न मुक्तेर्नित्यत्वं सिध्यतीति दूषयति—**नेति**। परमार्थतस्तु प्रध्वंसस्य कार्यत्वं नास्तीत्याह—**प्रध्वंसाभावोऽपीति**। प्रध्वंसाभावोऽप्यारभ्यत इति न संभवति, नैरुक्तैर्जनेर्भावपदार्थधर्मत्वप्रतिपादनविरोधेनाभावस्य भावरूपजन्माश्रयत्वायोगेन च प्रध्वंसाभावे जन्मरूपविशेषाभावाभ्युपगमादित्यर्थः। कथं तर्हि वादिनां प्रध्वंसाभावे जन्माश्रयत्वज्ञानमित्याशङ्क्य भ्रान्तिमात्रमेतदित्याह— **विकल्पमात्रमेतदिति**। ननु प्रध्वंसाभावस्य प्रतियोगिजन्यत्वाभावे तत्प्रतियोगिकत्वं न स्यादित्याशङ्क्य प्रागभावात्यन्ताभावयोरिव तस्य तत्प्रतियोगिकत्वं संभवतीत्याशयेनाह— **भावप्रतियोगी ह्यभाव इति**। अभावस्य भावप्रतियोगिकत्वं घटाभावः पटाभाव इति व्यवहारसिद्धमिति हि-शब्दार्थः। नन्वभावे भावप्रतियोगिकत्वविशेषाभ्युपगमे तत्र जनिरूपविशेषोऽपि परमार्थोऽस्त्विति न शङ्कनीयम्, भावप्रतियोगिकत्वस्यापि तत्र परमार्थत्वासिद्धेरित्येतत्सदृष्टान्तमाह— **यथा हीति**। भावः सत्त्वम्, तच्च सर्वानुगतं सद्रूपं वस्तुतो निर्विशेषं ब्रह्मैव नान्यत्; तद्यथा एकमपि घटसत्त्वं पटसत्त्वमिति रीत्या भिन्नमिव घटादिभिर्विशेष्यते घटादिप्रतियोगिकत्वेन कल्प्यते, तथा घटो नास्ति पटो नास्तीति प्रतीयमानाभावोऽप्येक एव, समवायसत्ताजात्यादिवत् लाघवात्; स चाभावः सर्वविशेषरहितोऽपि भावेषु घटादिषु मुद्गराभिघातादिजनितक्रियायोगाद्घटादिप्रतियोगिकत्वेन जातत्वेन च वादिभिर्भ्रान्त्या परिकल्प्यते, द्वावभा-

**गाद्द्रव्यादिवद्विकल्प्यते । न ह्यभाव उत्पलादिवद्विशेषणसहभावी । विशेषणवत्त्वे भाव एव स्यात् । विद्याकर्मकर्तुर्नित्यत्वात् विद्याकर्मसंतानजनितमोक्षस्य नित्यत्वमिति चेत्–गङ्गास्रोतोवत्; न, कर्तृत्वस्य दुःखरूपत्वात्, कर्तृत्वोपरमे च मोक्षविच्छेदात् । तस्मादविद्यादिकर्मोपादानहेतुनिवृत्तौ स्वात्मन्यवस्थानं मोक्षः । स्वयं चात्मा ब्रह्म । तद्विज्ञानादविद्या-**

वावित्यादिव्यवहारात् संख्यागुणयोगमभावस्य मत्वा द्रव्यत्वेनाभावः केनचित्परिकल्प्यते । एतदुक्तं भवति— यथा ह्यभावस्य द्रव्यान्तर्भावमाशङ्कमानस्याभावे गुणाश्रयत्वद्रव्यत्वभ्रान्तिः, तथा वादिनामपि तत्र वस्तुतो भावप्रतियोगिकत्वजन्माश्रयत्वादिरस्तीति भ्रान्तिरिति । अभावस्य वस्तुतो जन्मादिरूपभावधर्माश्रयत्वे बाधकमाह— **न ह्यभाव इत्यादिना** । भावधर्माश्रयस्य भावत्वनियमप्रसिद्धिद्योतनार्थो हि-शब्दः । **विशेषणसहभावीति** । विशेषणाश्रय इत्यर्थः । नन्वेकस्याभावस्य जन्मादिकल्पनास्पदस्य ब्रह्मतुल्ययोगक्षेमस्याङ्गीकारे द्वैतापत्तिरिति चेत्, नायं दोषः; भावाद्वैताभिप्रायेणास्य भाष्यस्य प्रवृत्त्युपपत्तेः । वस्तुतस्तु अयमभावो न ब्रह्मातिरिक्तः, ब्रह्मणि कल्पितघटादिप्रतियोगिकत्वात्कल्पितप्रतियोगिकाभावस्याधिष्ठानानतिरेकादिति मन्तव्यम् । साध्यस्य मोक्षस्य स्वरूपेण नित्यत्वायोगेऽपि प्रवाहनित्यत्वं संभवतीति शङ्कते— **विद्याकर्मकर्तुरिति** । कर्तुरात्मनो नित्यत्वादात्मा संततं विद्याकर्मणी कुर्वन्नेवास्ते; तथा च विद्याकर्मलक्षणसाधनसंतानजनितो मोक्षोऽपि संततोऽवतिष्ठते । प्रवाहनित्यत्वे दृष्टान्तमाह— **गङ्गेति** । **नेति** । मुक्तिकालेऽपि साधनानुष्ठातृत्वरूपस्य कर्तृत्वस्यानुवृत्त्युपगमे मुक्त्युच्छेदः, तस्य दुःखात्मकत्वात्; एतद्दोषपरिहाराय तदा तदुपरमोपगमे च मोक्षस्यापि विच्छेदादनित्यत्वं तदवस्थमेवेत्यर्थः । **तस्मादिति** । मोक्षस्य साध्यत्वे नित्यत्वभङ्गप्रसङ्गादित्यर्थः । काम आदिपदार्थः । कर्मोपादानहेतोरविद्यादेर्निवृत्तौ सत्यामित्यर्थः । ननु ब्रह्मात्मनावस्थानं मोक्षः 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः, न त्वात्मन्यवस्थानमिति शङ्कां निराकरोति— **स्वयं चेति** । नन्वविद्यादिनिवृत्तिरेव कर्मसाध्या अस्तु, तथा च कर्मभिरेव मोक्ष इति; नेत्याह— **तद्विज्ञानादिति** । कर्मणाम-

निवृत्तिरिति । अतो ब्रह्मविद्यार्थोपनिषदारभ्यते । उपनिषदिति विद्योच्यते, तच्छीलिनां गर्भजन्मजरादिनिशातनात्, तदवसादनाद्वा ब्रह्मणो वा उपनिगमयितृत्वात्; उप निषण्णं वा अस्यां परं श्रेय इति । तदर्थत्वाद्ग्रन्थोऽप्युपनिषत् ॥

**ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरु-**

विद्यानिवर्तने सामर्थ्याभावादिति भावः । इति-शब्दो विचारसमाप्त्यर्थः । एवं कर्मणां मुक्तिहेतुत्वं निरस्य आदौ ब्रह्मविद्या प्रस्तूयत इति यदुक्तं तदेवोपसंहरति— **अतो ब्रह्मविद्यार्थेति** । ब्रह्मविद्याया एव मुक्तिसाधनत्वादित्यर्थः । ब्रह्मविद्यायामुपनिषच्छब्दप्रसिद्धिरपि विद्याया एव निःश्रेयससाधनत्वे प्रमाणमित्याशयेनोपनिषच्छब्दार्थमाह— **उपनिषदितीति** । अत्र सामीप्यवाचिना उपोपसर्गेण प्रतीचो ब्रह्मसामीप्यमुच्यते । तच्च सामीप्यं तयोरभेदरूपं विवक्षितम् । नि-शब्दो निश्चयार्थः । तथा च उपसर्गद्वयेन तयोरभेदनिश्चयरूपा विद्योच्यते । विशरणावसादनगतयो धात्वर्थाः । क्विप्प्रत्ययश्चात्र कर्तरि विवक्षितः । ततश्च प्रत्यग्ब्रह्मैक्यगोचरा विद्या विदुषामनर्थं शातयति अवसादयति वा तान्ब्रह्म गमयतीति वा उपनिषत्पदेन सफला ब्रह्मविद्योच्यत इत्यर्थः । एतदेव विवृणोति— **तच्छीलिनामिति** । ब्रह्मविद्याभ्यासशीलवतामित्यर्थः । शातनं शिथिलीकरणम्, तेषां गर्भादीनामवसादनं नाशनम् । उपनिगमयितृत्वात् प्रत्यक्तया प्रापयितृत्वादित्यर्थः । एवमुपनिषत्पदस्य 'षद्लृ विशरणगत्यवसादनेषु' इति वैयाकरणप्रसिद्धिमनुसृत्यार्थत्रयं दर्शितम् । इदानीं स्वयमर्थान्तरमाह— **उप निषण्णं वेति** । उप सामीप्येन विषयतया अस्यां विद्यायां ब्रह्मस्वरूपं परं श्रेयो नितरामबाधिततया स्थितमित्यर्थः । उपनिषत्पदस्य ग्रन्थे प्रसिद्धिं घटयति— **तदर्थत्वादिति** विद्याप्रयोजनकत्वाद्ग्रन्थोऽप्युपनिषत्पदेन निरूढलक्षणया व्यवह्रियत इत्यर्थः । अत्र व्याख्येयस्य ग्रन्थस्य ब्रह्मविद्यार्थत्वोक्त्या तस्य माना-

विद्यासंयोजनेन। तदेव ब्रह्म वक्तारम् आचार्यं च वक्तृत्वसामर्थ्यसंयोजनेन अवतु। अवतु माम् अवतु वक्तारम् इति पुनर्वचनमादरार्थम्। शान्तिः शान्तिः शान्तिः इति त्रिर्वचनम् आध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमनार्थम् ॥

इति प्रथमानुवाकभाष्यम् ॥

---

उक्तप्रकारेण ब्रह्मवदनक्रियया स्तुतमित्यर्थः। इदमुपलक्षणम्। नमस्कृतं चेत्यपि द्रष्टव्यम्, तस्यापि पूर्वं कृतत्वात्। आध्यात्मिकेति। ज्वरशिरोरोगादय आध्यात्मिकाः, चोरव्याघ्राद्युपद्रवा आधिभौतिकाः, यक्षराक्षसाद्युपद्रवा आधिदैविका इति विभागः ॥

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमा
शीक्षावल्ल्यां प्रथमोऽनुवाकः ॥



# द्वितीयोऽनुवाकः ॥

अर्थज्ञानप्रधानत्वादुपनिषदः ग्रन्थपाठे यत्नोपरमो मा भूदिति शीक्षाध्याय आरभ्यते—

**शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम संतानः । इत्युक्तः शीक्षाध्यायः ॥**

**इति द्वितीयोऽनुवाकः ॥**

शिक्षा शिक्ष्यते अनयेति वर्णाद्युच्चारणलक्षणम्; शिक्ष्यन्त इति

शीक्षाध्यायारम्भस्य तात्पर्यमाह— अर्थज्ञानेत्यादिना । यत्नोपरम इति । अध्ययनकाले स्वरादिष्वौदासीन्यमित्यर्थः । स्वरवर्णादिव्यत्यासे च सत्यन्यथार्थावबोधः प्रसज्जेत; ततश्चानर्थप्रसङ्गः स्यात् 'मन्त्रो हीनः स्वरतो वर्णतो वा' इत्यादिशास्त्रादिति भावः । नन्वेवं सति कर्मकाण्डेऽप्ययमध्यायो वक्तव्य इति चेत्, सत्यम्; अत एवोभयसाधारण्यायायं काण्डयोर्मध्ये पठितः । ननु तर्हि भाष्ये उपनिषद्ग्रहणमनर्थकम्; नानर्थकम्, उपनिषत्पाठे यत्नाधिक्यद्योतनार्थत्वोपपत्तेः । तथा हि— कर्मकाण्डे क्वचिदन्यथार्थज्ञानपूर्वकान्यथानुष्ठानस्य प्रायश्चित्तेन समाधानं संभवति, 'अनाज्ञातं यदाज्ञातम्' इत्यादिमन्त्रलिङ्गात् । ज्ञानकाण्डे तु सगुणनिर्गुणवाक्यानामन्यथार्थावबोधे सति सम्यगुपासनानुष्ठानतत्त्वज्ञानयोरलाभात्पुरुषार्थासिद्धिरेव स्यात्, प्रायश्चित्तेनात्र समाधानासंभवात् । अतो यथावद्ब्रह्मबोधायोपनिषत्पाठे यत्नाधिक्यं कर्तव्यमिति द्योतनार्थत्वेनोपनिषद्ग्रहणमुपपद्यत इति ॥

शीक्षाशब्दस्य द्वेधा व्युत्पत्तिं दर्शयति— शिक्ष्यत इत्यादिना । लक्षणपदम् 'अकुहविसर्जनीयानां कण्ठः, इचुयशानां तालु, ऋटुरषाणां मूर्धा, लृतुलसानां दन्ताः' इत्यादिशास्त्रपरम् । नन्वेवं सति वर्णाद्युच्चारणलक्षणं शि-

वा शिक्षाः वर्णादयः। शिक्षैव शीक्षा। दैर्घ्यं छान्दसम्। तां व्याख्यास्यामः विस्पष्टम् आ समन्तात्कथयिष्यामः। चक्षिङः ख्याञा-दिष्टस्य व्याङ्पूर्वस्य व्यक्तवाक्कर्मण एतद्रूपम्। तत्र वर्णः अकारादिः। स्वरः उदात्तादिः। मात्राः ह्रस्वाद्याः। बलं प्रयत्नविशेषः। साम वर्णानां मध्यमवृत्त्योच्चारणं समता। संतानः संततिः, संहितेत्यर्थः। एष शिक्षितव्योऽर्थः, शिक्षा यस्मिन्नध्याये सोऽयं शीक्षाध्यायः, इति एवम् उक्तः उदितः। उक्त इत्युपसंहारार्थः॥

इति द्वितीयानुवाकभाष्यम्॥

---

क्ष्यतेऽनयेति व्युत्पत्तिरयुक्ता, तल्लक्षणस्य शीक्षाशब्दितेऽध्याये शिक्षणादर्शनादित्याशङ्क्य व्युत्पत्त्यन्तरं दर्शयति— **शिक्ष्यन्त इति**। वेदनीयत्वेनोपदिश्यन्त इत्यर्थः। **चक्षिङ इति**। 'चक्षिङः ख्याञ्' इति सूत्रेण ख्याञादिष्टो यस्य तस्येदं रूपम्, न तु 'ख्या प्रकथने' इत्यस्य, तस्यार्धधातुके प्रयोगाभावादित्यर्थः। व्यक्ता वाक्कर्म क्रिया अर्थो यस्य तस्येत्यर्थः। **मध्यमवृत्त्येति**। अतिद्रुतत्वादिकं विनेत्यर्थः॥

इति तैत्तिरीयोपनिषद्भाष्यव्याख्याया वनमालाख्याया शीक्षावल्ल्यां द्वितीयोऽनुवाकः॥



# तृतीयोऽनुवाकः ॥

सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः संꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासंꣳहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः संधिः ॥ १ ॥

अधुना संहितोपनिषदुच्यते । तत्र संहिताद्युपनिषत्परिज्ञाननिमित्तं यत् यशः प्राप्यते, तत् नौ आवयोः शिष्याचार्ययोः सहैव अस्तु । तन्निमित्तं च यत् ब्रह्मवर्चसं तेजः, तच्च सहैवास्तु इति शिष्यवचनमाशीः । शिष्यस्य हि अकृतार्थत्वात्प्रार्थनोपपद्यते; नाचार्यस्य, कृता-

---

अथातः संहिताया इत्यादेस्तात्पर्यमाह— अधुनेति । वर्णानामत्यन्तसामीप्यं संहिता, तद्विषयोपनिषदुपासनमिदानीमुच्यत इत्यर्थः । शं नो मित्र इत्याशीर्वादः कृत्स्नोपनिषच्छेषः । संहितोपनिषच्छेषमाशीर्वादान्तरं प्रथममाह— तत्रेति । उपनिषत्परिज्ञानमुपासनाविषयकं ज्ञानम्; तच्च शिष्यस्याचार्योपदेशजनितमाचार्यस्य च तदुपदेशप्रयोजकम्, तन्निमित्तकं यश इत्यर्थः । तेज इति । मुखकान्त्यादिरूपमुपनिषत्परिज्ञाननिमित्तकमित्यर्थः । ननु सहैवास्त्विति केन प्रार्थ्यते? तत्राह—शिष्यवचनमिति । तत्र विनिगमकमाह—शिष्यस्य हीति । तस्याकृतार्थत्वं प्रसिद्धमिति हि-शब्दार्थः । नन्वाचार्योऽप्यकृतार्थ

र्थत्वात् । कृतार्थो ह्याचार्यो नाम भवति । अथ अनन्तरम् अध्ययनलक्षणविधानस्य पूर्ववृत्तस्य, अतः यतोऽत्यर्थं ग्रन्थभाविता बुद्धिर्न शक्यते सहसार्थज्ञानविषयेऽवतारयितुमित्यतः, संहितायाः उपनिषदं संहिताविषयं दर्शनमित्येतत्, ग्रन्थसंनिकृष्टामेव व्याख्यास्यामः, पञ्चसु अधिकरणेषु आश्रयेषु, ज्ञानविषयेष्वित्यर्थः । कानि तानीत्यत आह— अधिलोकं लोकेष्वधि यद्दर्शनम्, तदधिलोकम्; तथा अधिज्योतिषम् अधिविद्यम् अधिप्रजम् अध्यात्ममिति । ताः एताः पञ्चविषया उपनिषदः लोकादिमहावस्तुविषयत्वात्संहिताविषयत्वाच्च महत्यश्च ताः संहिताश्च महा-

---

एव शिष्यसापेक्षत्वादिति; नेत्याह— कृतार्थो हीति । न ह्याचार्यस्य स्वप्रयोजनसिद्ध्यर्थं शिष्यापेक्षास्ति, किं तु केवलं तदनुग्रहार्थमेवाचार्यप्रवृत्तिरिति भावः । नन्वेवमाचार्यस्य शिष्येण किमर्थं यशआदि प्रार्थ्यते? स्वार्थमेवेति ब्रूमः, यशस्विनः शिष्या हि लोके यशस्विनो भवन्ति; यशस्विनां च लाभपूजादिकं फलं प्रसिद्धम्; अतः स्वार्थमेव शिष्यो गुरोर्यशः प्रार्थयत इत्यनवद्यम् । पूर्ववृत्तस्यानन्तरमिति संबन्धः । वस्तूपासनं हित्वा प्रथमतः शब्दोपासनविधाने हेतुरतःशब्देनोक्त इत्याह— यतोऽत्यर्थमिति । ज्ञानमुपासनम्, तदेव विषयः, तस्मिन्नित्यर्थः । ग्रन्थसंनिकृष्टामेवेति । संहितारूपग्रन्थप्रधानामेवेति यावत् । नन्वधिकरणेष्विति सप्तम्या लोकादिषु संहितादृष्टिविधिरिह विवक्षित इति प्रतीयते; तथा सति लोकानामेव संहितादृष्ट्योपास्यत्वं स्यात्; तच्चोपक्रमोपसंहारविरुद्धम्, 'अथातः संहितायाः' इत्युपक्रमे 'य एवमेता महासंहिता व्याख्याता वेद' इत्युपसंहारे च संहिताया एवोपास्यत्वावगमादित्याशङ्क्याह— ज्ञानविषयेष्वित्यर्थ इति । अधिकरणपदस्य विषयपरत्वोक्तिरुपलक्षणम्; सप्तमी तृतीयार्थपरेत्यपि द्रष्टव्यम् । तथा च लोकाद्यात्मना संहितैवोपास्येति लभ्यते, अतो न विरोध इति भावः । लोकेष्वधीति । लोकविषयकमिति यावत् । एवमुत्तरत्रापि । अत्र विधित्सितानामुपासनानां स्तावकं ता महासंहिता इति वाक्यम् । तद्व्याचष्टे— ता एता इति ।

संहिताः इति आचक्षते कथयन्ति वेदविदः । दर्शनक्रमविषयाः अथ-शब्दाः । अथ तासां यथोपन्यस्तानां मध्ये अधिलोकं दर्शनमुच्यते । पृथिवी पूर्वरूपम् , पूर्वो वर्णः पूर्वरूपम् , संहितायाः पूर्ववर्णे पृथिवी-दृष्टिः कर्तव्येत्युक्तं भवति । तथा द्यौः उत्तररूपम् । आकाशः अन्तरिक्ष-लोकः संधिः मध्यं पूर्वोत्तररूपयोः, संधीयेते अस्मिन्पूर्वोत्तररूपे इति ॥

वायुः संधानम् । इत्यधिलोकम् । अथाधि-ज्योतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररू-पम् । आपः संधिः । वैद्युतः संधानम् । इत्यधि-ज्योतिषम् । अथाधिविद्यम् । अचार्यः पूर्वरूपम् ॥

अन्तेवास्युत्तररूपम् । विद्या संधिः । प्रवचनꣳ संधानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा संधिः । प्रजन-नꣳ संधानम् । इत्यधिप्रजम् ॥ ३ ॥

---

अथाधिलोकमथाधिज्योतिषमित्यादिवाक्यस्थाथशब्दानामर्थमाह— दर्शनक्र-मेति । अत्रोपासनस्यैकत्वेन कर्तुरेकत्वाल्लोकादिभेदेन प्रयोगभेदाच्चावश्यंभा-विनि क्रमे तद्विधानार्था अथशब्दा इत्यर्थः । तत्राद्योऽथशब्द आरम्भार्थः, इतरे तन्निरूपितक्रमार्था इति भावः । उपनिषदः कथं कर्तव्या इत्याकाङ्क्षा-यामाह— तासामित्यादिना । ननु संहितायाः पूर्ववर्णः पृथिवीति कथं सामानाधिकरण्यं तयोर्भेदादित्याशङ्क्याह— पूर्ववर्ण इति । मनो ब्रह्म इत्या-दिवदत्र सामानाधिकरण्यमिति भावः । मध्यमिति । पूर्वोत्तररूपे संधीयेते अस्मिन्निति व्युत्पत्त्या यत्संधिशब्दवाच्यं पूर्वोत्तररूपयोर्मध्यम्, तत्रान्त-रिक्षलोकदृष्टिः कर्तव्येत्यर्थः ॥

**अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्संधिः । जिह्वा संधानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । संधीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥**

वायुः संधानम् । संधीयते अनेनेति संधानम् । इति अधिलोकं दर्शनमुक्तम् । अथाधिज्योतिषम् इत्यादि समानम् । इतीमा इति उक्ता उपप्रदर्श्यन्ते । यः कश्चित् एवम् एताः महासंहिताः व्याख्याताः वेद

---

वायुरिति । संधीयेते पूर्वोत्तररूपे अनेनेति व्युत्पत्त्या संधानशब्दवाच्यं यत्संहितारूपम्, तत्र वायुदृष्टिः कर्तव्येत्यर्थः । इदं च कचिदुदाहृत्य प्रदर्श्यते— 'इषे त्वा' इत्यत्र षकारस्योपरि योऽयमेकारः सोऽयं पृथिवीरूपः; यश्चोपरितनस्तकारः स द्युलोकः; तयोर्वर्णयोर्मध्यदेशोऽन्तरिक्षलोकः; तस्मिन्देशे संहितानिमित्तो द्विर्भावेनापादितो योऽन्यस्तकारः स वायुरिति । समानमिति । अथाधिज्योतिषम्, अग्निः पूर्वरूपम्, आदित्य उत्तररूपम्, आपः संधिः, वैद्युतः संधानम्, इत्यधिज्योतिषम् । ज्योतिःशब्देनात्र जहल्लक्षणया आपः संगृहीताः । विद्युदेव वैद्युतः । अथाधिविद्यम्, आचार्यः पूर्वरूपम्, अन्तेवास्युत्तररूपम्, विद्या संधिः, प्रवचनं संधानम्, इत्यधिविद्यम् । इत्यधिविद्यमित्यत्र विद्याशब्देन आचार्यादयो जहल्लक्षणयैव संगृहीता इति बोध्यम् । विद्याशब्दश्चाध्येतव्यग्रन्थपरः । ग्रन्थस्याध्ययनमध्यापनं वा प्रवचनम् । अथाधिप्रजम्, माता पूर्वरूपम्, पितोत्तररूपम्, प्रजा संधिः, प्रजननं संधानम्, इत्यधिप्रजमित्यत्र प्रजाशब्दो मात्रादीनपि पूर्ववत्संगृह्णाति । प्रजननं प्रजाया उत्पत्तिः । अथाध्यात्मम्, अधरा हनुः पूर्वरूपम्, उत्तरा हनुरुत्तररूपम्, वाक्संधिः, जिह्वा संधानम्, इत्यध्यात्मम् । अत्रात्मा देहः, तदवयवविषयमुपासनमध्यात्ममित्यर्थः । एतेषु समानं योजनमित्यर्थः । उपप्रदर्श्य-

उपास्ते; वेदेत्युपासनं स्यात्, विज्ञानाधिकारात्, 'इति प्राचीनयोग्योपास्व' इति च वचनात् । उपासनं च यथाशास्त्रं तुल्यप्रत्ययसंततिरसंकीर्णा च अतत्प्रत्ययैः शास्त्रोक्तालम्बनविषया च । प्रसिद्धश्चोपासनशब्दार्थो लोके— 'गुरुमुपास्ते' 'राजानमुपास्ते' इति । यो हि गुर्वादीन्संततमुपचरति, स उपास्त इत्युच्यते । स च फलमाप्नोत्युपासनस्य । अतोऽत्रापि य एवं वेद, संधीयते प्रजादिभिः स्वर्गान्तैः । प्रजादिफलं प्राप्नोतीत्यर्थः ॥

इति तृतीयानुवाकभाष्यम् ॥

---

न्त इति । उपसंह्रियन्त इति यावत् । वेदेत्यस्य ज्ञानवाचित्वात्कथं ज्ञानावृत्तिरूपोपासनपरत्वमित्याशङ्क्य तत्साधयति— **वेदेत्युपासनं स्यादित्यादिना** । **विज्ञानाधिकारादिति** । उपास्तिप्रकरणादित्यर्थः । तत्र मानमाह— **इति प्राचीनेति** । यथाशास्त्रमित्यनेन यत्राहंग्रहश्चोदितस्तत्राहंग्रहेण, अन्यत्र तं विनेति विवक्षितम् । तुल्यत्वमेकविषयकत्वम् । **अतत्प्रत्ययैरिति** । ध्येयान्यगोचरैः प्रत्ययैरित्यर्थः । एकवस्तुगोचरा विच्छेदरहिता प्रत्ययसंततिरुपासनमिति निष्कर्षः । ननु सकृत्प्रत्यय एवोपासनमस्तु, किं तदावृत्त्येत्याशङ्क्य क्रियावृत्तावेवोपासनशब्दः प्रसिद्धो लोके, न सकृत्क्रियायाम् , अतोऽत्र वेदेत्यनेन प्रत्ययक्रियावृत्तिरेव लक्षणीयेत्याशयेनाह— **प्रसिद्धश्चेत्यादिना** । ननु तत्रापि सकृदुपचारक्रियैवोपासनम्; नेत्याह— **यो हीति** । पृथिवी पूर्वरूपमित्यादिवेदनमात्रात्फलासंभवादप्युपासनमेवात्र विधेयम्, उपासनस्य तु योग्यतया वक्ष्यमाणं फलं संभवति, लोकेऽप्युपासनस्य फलवत्त्वसिद्धेरित्याशयेनाह— **स चेति** । गुर्वाद्युपासक इत्यर्थः । **अतोऽत्रापीति** । गुर्वाद्युपासनस्य लोके फलवत्त्वदर्शनात् अत्रापि संहिताविषयेऽपि, य एवं लोकादिदृष्ट्या संहिता उपास्त इत्यर्थः । **संधीयत इति** । संबध्यत इत्यर्थः । अत्र फलकामिना क्रियमाणमुपासनं कामितफलाय भवति, फलाभिसंधिरहितेन तु क्रियमाणं तदेव विद्यासाधनं भवतीति ब्रह्मविद्यासंनिध्याम्नानबलात्कल्प्यत इति मन्तव्यम् ॥

इति तैत्तिरीयोपनिषद्भाष्यव्याख्यायां वनमालाख्यायां शीक्षावल्ल्यां तृतीयोऽनुवाकः ॥

# चतुर्थोऽनुवाकः

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय । आवहन्ती वितन्वाना ॥ १ ॥

कुर्वाणाचीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा । आमायन्तु ब्रह्मचारिणः स्वाहा । विमायन्तु ब्रह्मचारिणः स्वाहा । प्रमायन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा ॥

यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्सहस्रशाखे । निभगाहं

स्त्वयि मृजे स्वाहा। यथापः प्रवता यन्ति। यथा मासा अहर्जरम्। एवं मां ब्रह्मचारिणः। धातरायन्तु सर्वतः स्वाहा। प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व॥ ३॥

यश्छन्दसामिति मेधाकामस्य श्रीकामस्य च तत्प्राप्तिसाधनजपहोमावुच्येते, 'स मेन्द्रो मेधया स्पृणोतु' 'ततो मे श्रियमावह' इति च लिङ्गदर्शनात्। यः छन्दसां वेदानाम् ऋषभ इव ऋषभः, प्राधान्यात्। विश्वरूपः सर्वरूपः, सर्ववाग्व्याप्तेः 'तद्यथा शङ्कुना' इति श्रुत्यन्तरात्। अत एव ऋषभत्वमोंकारस्य। ओंकारो ह्यत्रोपास्य इति ऋषभादिशब्दैः स्तुतिर्न्याय्यैव ओंकारस्य। छन्दोभ्यः वेदेभ्यः, वेदा ह्यमृतम्, तस्मात् अमृतात्

---

ननु यश्छन्दसामित्यादयो मन्त्राः किमर्थमाम्नायन्ते? तत्राह— मेधेति। मेधाकामस्य मेधाप्राप्तिसाधनं जप उच्यते, श्रीकामस्य श्रीप्राप्तिसाधनं होम उच्यत इति विभागः। एवं तात्पर्यवर्णने कारणमाह— स मेन्द्र इत्यादिना। ऋषभ इति। गवां मध्ये प्रधानत्वाद्यथा ऋषभः श्रेष्ठः, तथा वेदानां मध्ये प्रणवः श्रेष्ठः प्राधान्यादित्यर्थः। ननु कथमोंकारस्य सर्वरूपत्वमित्याशङ्क्याह— सर्ववाग्व्याप्तेरिति। शब्दमात्रे कृत्स्नस्याभिधेयस्यान्तर्भावम् 'तस्य वाक्तन्तिः' इत्यादिश्रुत्युक्तं सिद्धं कृत्वा तस्य सर्वशब्दात्मकत्वे प्रमाणमाह— तद्यथेति। 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णा' इति श्रुत्यन्तरम्। तस्य चायमर्थः— यथा लोके अश्वत्थपर्णानि शङ्कुशब्दवाच्येन स्वगतशलाकाविशेषेण व्याप्तानि, तद्वदोंकारेण सर्वा शब्दात्मिका वाग्व्याप्तेति। अत एवेति। विश्वरूपत्वाच्च तस्य श्रेष्ठत्वमित्यर्थः। नन्वोंकारस्यात्र स्तुतिरन्याय्या; नेत्याह— ओंकारो ह्यत्रेति। अस्यां संहितोपनिषद्योंकारस्य 'ओमिति ब्रह्म' इत्यत्रोपासनं प्रसिद्धमिति हि-शब्दार्थः। ओंकारस्य सर्ववेदेषु प्राधान्यं कुत इत्याशङ्क्य

अधि संबभूव ; लोकदेववेदव्याहृतिभ्यः सारिष्ठं जिघृक्षोः प्रजापतेस्तपस्यतः ओंकारः सारिष्ठत्वेन प्रत्यभादित्यर्थः । न हि नित्यस्य ओंकारस्य अञ्जसैवोत्पत्तिरवकल्पते । सः एवंभूत ओंकारः इन्द्रः सर्वकामेशः परमेश्वरः मा मां मेधया प्रज्ञया स्पृणोतु प्रीणयतु, बलयतु वा, प्रज्ञाबलं

---

तद्धेतुप्रदर्शनपरं छन्दोभ्य इति वाक्यं व्याचष्टे— **वेदेभ्य इत्यादिना** । अमृतादिति वेदविशेषणम् 'वेदा ह्यमृताः' इति श्रुत्यन्तरात्, एकवचनं च च्छान्दसमित्याशयेनाह— **वेदा ह्यमृतमिति** । वेदानाममृतत्वं नित्यत्वम्, तच्चावान्तरप्रलये नाशाभावरूपं विवक्षितम् । न त्वात्यन्तिकं नित्यत्वमस्ति वेदानाम्; कल्पादौ सृष्टिश्रवणात्, महाप्रलये नाशाभ्युपगमाच्च । इदं च देवताधिकरणे विस्तरेण निरूपितं तत्रैव द्रष्टव्यम् । संबभूवेत्यस्यार्थमाह— **लोकदेवेति** । सारिष्ठमिति । सारतममित्यर्थः । तथा च श्रुतिः— 'प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः सुवरिति तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओंकारः संप्रास्रवत्' इति । अभ्यतपत् सारजिघृक्षया पर्यालोचितवानित्यर्थः । त्रयो वेदास्त्रयी विद्या । यद्यप्यस्यां श्रुतौ लोकानन्तरं देवा न श्रूयन्ते, तथापि 'प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानां रसान्प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानां रसान्प्रावृहत्' इत्यत्र देवा अपि श्रूयन्त इत्यभिप्रेत्य देवग्रहणमिति मन्तव्यम् । प्रावृहत् गृहीतवान्, सारत्वेन ज्ञातवानित्यर्थः । ननु संबभूवेति पदं जन्मपरत्वेनैव कुतो न व्याख्यायते? तत्राह— **न हीति** । **नित्यस्येति** । अवान्तरप्रलयावस्थायिन इत्यर्थः । प्रणवस्य वेदान्तर्भूतत्वेन वेदसमानयोगक्षेमस्य वेदेभ्यः सकाशान्मुख्यं जन्म न हि संभवतीत्याशयः । परमेश्वर इत्यस्य विवरणं सर्वकामेश इति । ननु मेधाप्रदानेन यत्प्रीणनं तात्कालिकप्रीतिसंपादनं न तद्विद्याकामस्य विवक्षितं प्रयोजनमित्यस्वरसादाह— **बलयतु वेति** । अत्र विद्याकामस्यापेक्षां दर्शयति— **प्रज्ञाबलं हीति** । प्रज्ञात्र मेधाशब्दार्थः । सा च

हि प्रार्थ्यते । अमृतस्य अमृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य, तदधिकारात्; हे देव, धारणः धारयिता भूयासं भवेयम् । किं च, शरीरं मे मम विचर्षणं विचक्षणं योग्यमित्येतत्, भूयादिति पुरुषविपरिणामः । जिह्वा मे मधुमत्तमा मधुमती, अतिशयेन मधुरभाषिणीत्यर्थः । कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवं व्यश्रवम्, श्रोता भूयासमित्यर्थः । आत्मज्ञानयोग्यः कार्यकरणसंघातोऽस्त्विति वाक्यार्थः । मेधा च तदर्थमेव हि प्रार्थ्यते । ब्रह्मणः परमात्मनः कोशः असि, असेरिव उपलब्ध्यधि-

---

ग्रन्थतदर्थधारणशक्तिः, सैव बलम् । प्रज्ञाबलस्य च 'नायमात्मा बलहीनेन लभ्यः' इति श्रुतिसिद्धं विद्यासाधनत्वं द्योतयितुं हि-शब्दः । तदधिकारादिति । अमृतशब्दमुख्यार्थस्य ब्रह्मणो धारणासंभवादमृतशब्देन मुख्यार्थादन्यदेव किंचिल्लक्षणीयम्; तच्चामृतशब्दितब्रह्मप्राप्तिसाधनं ब्रह्मज्ञानमेव वक्तव्यम्, तत्साधनप्रज्ञाप्रार्थनेन तस्यैव बुद्धिस्थत्वादित्यर्थः । पुरुषविपरिणाम इति । उत्तमपुरुषत्वेन पूर्वत्र प्रयुक्तस्य भूयासमित्यस्य भूयादिति प्रथमपुरुषत्वेनात्र व्यत्यासः कर्तव्य इत्यर्थः । मधुरभाषिणीति । भूयादित्यनुषङ्गः । ननु चक्षुरादेरपि ज्ञानं प्रत्यानुकूल्यं कुतो न प्रार्थ्यते? प्रार्थ्यत एवेत्याशयेन शरीरं मे विचर्षणमित्यादेर्विवक्षितमर्थमाह— आत्मज्ञानेति । कार्यं स्थूलशरीरम्, करणानि चक्षुरादीनि, तेषां संघातः समुदाय इत्यर्थः । ननु संघातनिष्ठा योग्यता चेदात्मज्ञानाय प्रार्थ्यते, किमर्थं तर्हि मेधा प्रार्थ्यते? तत्राह— मेधा चेति । रोगादिप्रतिबन्धरहितस्य जितेन्द्रियस्यापि मेधां विनात्मज्ञानासंभवात्सापि प्राधान्येनात्मज्ञानार्थमेव प्रार्थ्यत इत्यर्थः । आत्मज्ञानं प्रति प्रज्ञायाः प्रकृष्टसाधनत्वद्योतनार्थो हि-शब्दः । अत्राचेतनस्याप्योंकारस्य ब्रह्माभेदेन प्रार्थितदाने सामर्थ्यमवगन्तव्यम् । ननु कथं तस्य ब्रह्माभेदः? तत्प्रतीकत्वादिति ब्रूमः । कथं तस्य तत्प्रतीकत्वम्? तत्राह— ब्रह्मणः परमात्मन इति । नन्वसिं प्रति प्रसिद्धकोशस्येव ब्रह्म प्रति प्रणवस्य स्वस्मिन्नन्तर्भावयितृत्वरक्षकत्वादेरभावान्न मुख्यं कोशत्वमस्ति; तत्राह— उपलब्धीति ।

ष्ठानत्वात्; त्वं हि ब्रह्मणः प्रतीकम्; त्वयि ब्रह्मोपलभ्यते। मेधया लौकिकप्रज्ञया पिहितः आच्छादितः स त्वं सामान्यप्रज्ञैरविदिततत्त्व इत्यर्थः। श्रुतं श्रवणपूर्वकमात्मज्ञानादिकं विज्ञानं मे गोपाय रक्ष तत्प्राप्त्यविस्मरणादिना। जपार्था एते मन्त्रा मेधाकामस्य। होमार्थास्त्वधुना श्रीकामस्य मन्त्रा उच्यन्ते— आवहन्ती आनयन्ती; वितन्वाना विस्तारयन्ती, तनोतेस्तत्कर्मत्वात्; कुर्वाणा निर्वर्तयन्ती, अचीरम् अचिरं क्षिप्रमेव; चिरं वा कुर्वाणा आत्मनः मम; किमित्याह— वासांसि

---

यथासिः कोशे उपलभ्यते तथा ओंकारे ब्रह्मोपलभ्यते; ततश्चोपलब्धिस्थानत्वसाम्यात्कोशशब्दो गौण ओंकार इत्यर्थः। तदेव साम्यं विवृणोति—त्वं हीति। तस्य ब्रह्मप्रतीकत्वे श्रुत्यन्तरप्रसिद्धिद्योतनार्थो हि-शब्दः। प्रतीकमिति। दृष्ट्यालम्बनमित्यर्थः। ब्रह्मदृष्टिफलमाह— त्वयीति। उपलब्धिः साक्षात्कारः। ननु यद्योंकारः प्रार्थितफलदाने समर्थस्तर्हि किमिति स सर्वैर्नोपास्यत इति शङ्कावारणार्थं मेधया पिहित इति वाक्यम्। तद्व्याचष्टे— मेधयेत्यादिना। ननु शास्त्राजनिता प्रज्ञा लौकिकप्रज्ञा, तस्याः कथं पीठादेरिव पिधायकत्वमित्याशङ्कयात्र विवक्षितं पिधानं कथयति— स त्वमिति। उक्तलौकिकप्रज्ञामात्रयुक्ताः सामान्यप्रज्ञाः; स त्वं सामान्यप्रज्ञैरविदितमहिमासि; तस्मात्त्वं न सर्वैरुपास्यत इत्यर्थः। श्रवणपूर्वकमात्मज्ञानादिलक्षणं विज्ञानं श्रुतम्, तत्प्राप्त्यविस्मरणादिना गोपायेति योजना। प्रथमादिपदेन मननजनितं ज्ञानं संगृह्यते। द्वितीयादिपदेन रागादिलक्षणप्रतिबन्धनिवृत्तिः संगृह्यते। तदुक्तं वार्त्तिके— 'रागद्वेषादिहेतुभ्यः श्रुतं गोपाय मे प्रभो' इति। तत्कर्मत्वादिति। तनोतेर्धातोस्तदर्थकत्वादित्यर्थः। ममेति। ममान्नपानादिकं सर्वमानयन्ती सर्वदा संपादयन्ती तथा संपादितं सर्वं विस्तारयन्ती वर्धयन्ती वर्धितं सर्वं चिरं दीर्घकालं कुर्वाणा वर्तयन्ती, यथा विनष्टं न भवति तथा कुर्वतीति यावत्। अचिरमिति च्छेदः संभावनामात्रेण। दैर्घ्यं छान्दसम्। किमित्याहेति। किमावहन्तीत्याकाङ्क्षायामाहेत्यर्थः। अत्रावहन्तीत्यादिपदत्रयं श्रियो

तस्त्रश्चतस्रो व्याहृतयः। ता यो वेद। स वेद ब्रह्म। सर्वेऽस्मै देवा बलिमावहन्ति ॥ ३ ॥

इति पञ्चमोऽ[illegible] ॥

संहिताविषयमुपासनमुक्तम्। तदनु मेधाकामस्य श्रीकामस्य चानुक्रान्ता मन्त्राः। ते च पारम्पर्येण विद्योपयोगार्था एव। अनन्तरं व्याहृत्यात्मनो ब्रह्मणः अन्तरुपासनं स्वाराज्यफलं प्रस्तूयते। भूर्भुवः सुवरितीत्युक्तोपप्रदर्शनार्थः। एतास्तिस्र इति प्रदर्शितानां परामर्शार्थः। परामृष्टाः स्मर्यन्ते वै इत्यनेन। तिस्र एताः प्रसिद्धा व्याहृतयः स्मर्यन्ते तावत्। तासाम् इयं चतुर्थी व्याहृतिर्मह इति; तामेतां चतुर्थीं महाचमसस्यापत्यं

---

वृत्तानुवादपूर्वकमुत्तरानुवाकद्वयतात्पर्यमाह— संहिताविषयमित्यादिना। संहितोपासनं फलाभिसंधिं विनानुष्ठितं चित्तशुद्धिद्वारा विद्योपयोगार्थमिति सूचयति— ते चेति। च-शब्दोऽप्यर्थः। संहितोपासनवत्तेऽपीत्यर्थः। अन्तरिति। व्याहृतीनां श्रद्धागृहीतत्वात्तत्परित्यागेनोपदिश्यमानं ब्रह्म न बुद्धिमारोहति। अतो व्याहृतिशरीरस्य ब्रह्मणो हृदयान्तरुपासनमुपदिश्यत इत्यर्थः। तात्पर्यमुक्त्वाक्षरव्याख्यानाय प्रतीकमादत्ते— भूर्भुवः सुवरिति। इतीत्युक्तेति। भूर्भुवःसुवरिति वाक्येनोक्तानां व्याहृतीनां पाठक्रमलब्धक्रमानुवादार्थः श्रुताविति शब्द इत्यर्थः। प्रदर्शितानामिति। प्रदर्शितक्रमोपेतानां व्याहृतीनां स्वरूपानुवादार्थं एतास्तिस्रो व्याहृतय इति शब्द इत्यर्थः। ननु क्रमतः स्वरूपतश्च ताः किमर्थं परामृश्यन्ते? तत्राह— परामृष्टा इति। स्मृतिं विवृणोति— तिस्र एता इति। स्मर्यन्ते तावदिति। तावच्छब्दः प्राथम्यार्थः। कर्मकाण्डे कर्माङ्गत्वेन प्रसिद्धव्याहृतयः इह प्रथमं स्मर्यन्ते वै-शब्देन तासु क्रमेणोपासनविधानार्थमित्यर्थः। सोमपानार्थं महांश्चमसो यस्य स महाचमस इति वेदभाष्यकाराः। अपत्यमिति। गोत्रापत्यमित्यर्थः। तथा च वार्त्तिके दर्शितम्— 'महाचमसगोत्रत्वाद्गोत्रार्थस्तद्धितो भवेत्' इति। प्रवेदयत इति

